णेसंघेअभिधेयेचिनोतेर्घञ् अप्रत्ययोभवति आदेश्चका
देशः देवनिकायः ग्रामनिकायः सङ्घइतिकिम्
मरीचिनिचयः अनौत्तराधर्येइतिकिम् प्राणिनिच
यः      स्वरवृदृगमिग्रहामल्      स्वरान्ता
द्धातोः वृङ् वृञ्भ्यां दृङ् आदरे गमग्रहौ ग्रह
उपादाने एभ्यःअल्प्रत्ययोभवति लकारश्चलो
वेशीत्यर्थः स्वरान्तात् चयःजयः रवः लवः वरः दरः
गमः ग्रहः      उपसर्गेऽदः      उपसर्गे उपपदे
अदभक्षणे इत्यस्मादल्भवति विघसः उपसर्गेइतिकि
म् घासः पूर्ववद्घञ्      मदोऽप्रसमोर्हर्षे
मदीहर्षेइत्यस्य प्रसमोरुपपदयोः हर्षेगम्यमाने अ
ल्भवति प्रमदः संमदः प्रसमोरितिकिम् परिमादः
हर्षेइतिकिम् प्रमादोऽनवधानता संमादः
व्यधजपोश्चानुपसर्गे      मदेःव्यधताडने ज
पमानसे अनयोश्चानुपसर्गेसतिअल्भवति मदः व्य
धः जपः अनुपसर्गेइतिकिम् उन्मादः अभिव्याधः उ
पजापः आपःकर्त्तरि कलपुडोनयापीतिवचनात्
स्वनहसोर्वा      स्वनशब्दे हसहासे अनयोर
नुपसर्गेसतिवाअल्भवति स्वनः स्वानः हसः हासः
अनुपसर्गेइतिकिम् प्रस्वानः उपहासः      यमः
समुपनिविषु      यमउपरमे इत्यस्य सम् उपनि
विषुउपपदेषुवा अल्भवति संयमः संयामः उपयमः
उपयामः नियमः नियामः वियमः वियामः

नौ गदनदपठस्वनाम् निशब्दे उपपदे गद नद पठ स्वनां धातूनां अब्वा भवति निगदः निगादः निनदः निनादः निपठः निपाठः निस्वनः निस्वानः अनुपसर्गे इति वृत्तम्

क्वणो वीणायां च नौ अनुपसर्गे इति च वर्तते क्वणधातोः निशब्दे उपपदे अनुपसर्गे च सति अब्वा भवति वीणायां च वीणाया विषये उपसर्गेऽपि उपपदे विकल्प इत्यर्थः क्वणः क्वाणः निक्वणः निक्वाणः वीणायाः क्वणः क्वाणः प्रक्वणः प्रक्वाणः इति

पणः परिमाणे नित्यम् पण व्यवहारे इत्यस्य परिमाणेऽर्थे नित्यमप् भवति मूलकपणः शाकपणः परिमाणे इति किम् पाणः

मदोऽनुपसर्गे अनुपसर्गे विषये वर्तमानात् मद हर्षे इत्यस्मात् नित्यमेवाप् भवति मदः परिमदः मद इत्यर्थः अनुपसर्गे इति किम् उन्मादः

सर्तेः प्रजने सृ गतौ इत्यस्य प्रजनेऽभिधेये नित्यमप् भवति गवामुपसरः उपसरो गर्भग्रहणकालः प्रजनादन्यत्र संसारः

ह्वः सम्प्रसारणं च न्यभ्युपविषु अभि उप नि वि इत्येतेषूपपदेषु ह्वेञ् स्पर्धायामित्यस्मात् अप् भवति सम्प्रसारणं चादेशः अभिहवः उपहवः निहवः विहवः

समुदोरजः पशुषु समुदोः उपपदयोः अज गतिक्षेपणयोरित्यस्य पशुविषयेऽर्थे अप् भवति पशूनां समजो न्येषां समाजः समजः पशूनां इति किम्

ग्नः इदमत्र घञ्प्रत्ययान्तमिति च     आङि युद्धे
हन्तेः स्वार्थे घञर्थे चाऽस्य आङि उपपदे युध्यमाने
ऽल्भवति घ्नादेशश्च आहवो युद्धम् आहूयन्तेऽस्मि
न्निति वा कार्यम् आह्वानमाह्वयः ह्वानमिति वचनादु
पयाहत्वोऽत्र वक्तव्यः     भावेऽनुपसर्गस्य
अनुपसर्गस्य ह्वेञः भावेऽर्थे अल्भवति ह्वादेशः ह
वः अनुपसर्गस्येति किम् संह्वायः     हन्ते
र्वधिश्च     हन्तेः सामान्याभिधेयस्यानुपसर्गस्य भा
वेऽर्थे अल्भवति हन्तेर्वधिरादेशश्च हननं वधः अनुप
सर्गस्येति किम् संघातः     मूर्तौ घनिश्च
मूर्तौ गम्यमानायां हन्तेरल्भवति घनिरादेशश्च इ
काठस्यावयवार्थः दधिघनः विस्तारघनः मूर्तिः काठि
न्यम्     अन्तर्घनैकदेशे च     अन्तःशब्द उप
पदस्य हन्तेरेकदेशविषये अल्भवति घन
घनिरादेशश्च अन्तर्घनः स्थानविशेषो वाहीकेषु प्रको
केऽन्यत्रः एकदेश इति किम् घातः
करणेऽयोविद्रुषु     अयस् विद्रु घन उपपदेषु ह
न्तेः करणकारकेऽल्भवति घनिरादेशश्च अयोघन
न्तेयेन सः अयोघनः विहन्यतेयेन स विघनः द्रुहन्यते
येन स द्रुघनः     परौ घः परिशब्दे उपपदे हन्तेः
करणेऽल्प्रत्ययो भवति घादेशश्च परिहन्यते येन
स परिघः     सङ्घोद्घौ गणप्रशस्तयोः
सम् उत् उपपदयोः हन्तेरल्प्रत्ययो भवति यथासं

हनगणोप्रशंसायांचार्थे घनिपातेशश्च संहन्यते स
ङ्घः उद्घतोभवति उद्घः गणप्रशंसयोरितिकिम्
संहातः उद्घातः उपघ्नआश्रये
उपपूर्वाद्धन्तेः आश्रयेर्थे कप्रत्ययोभवति उपघ्नः
आश्रयः अन्यत्र उपघातः ड्वितोथुः
डुवादेरनुबन्धोयस्यतस्मात् भावे अकर्तरिचकार
के अथुप्रत्ययोभवति टुओश्वि श्वयथुः टुवेपृ वेपथुः
टुनन्दि नन्दथुः टुक्षु क्षवथुः डुवाहृद्दार्थः
ड्वितस्त्रिमक्तेननिर्वृत्ते डुवादेरनुब
न्धोयस्यतस्माद्धातोः तेनधात्वर्थेननिर्वृत्तेऽभिधेयेत्रि
मक्प्रत्ययोभवति ककारगुणवृद्धिबाधार्थः डुकृञ् क
रणेननिर्वृत्तंकृत्रिमम् डुपचष् पचनेननिर्वृत्तं प
क्त्रिमम् डुदाञ् दानेननिर्वृत्तंदत्त्रिमम् दत्रायइति
ददादेशः डुवाहृद्दार्थः याचिविच्छि
प्रच्छिस्वपिरक्षियजियतिभ्योनङ्
डुयाच्ञ्याच्ञायाम् विच्छगतौ प्रच्छज्ञीप्सायाम् ञिष्व
प् शयने रक्षपालने यजदेवता यतीप्रयत्ने एभ्योन
ङ्भवति विशेषादिसः सकारंनबाधते इतिभावे
अकर्तरिचकारकेवर्तते नतेननिर्वृत्तइति याच्ञा
विश्नः प्रश्नः प्रश्नाख्यानयोरितिज्ञापकात्संप्रसार
णाभावः छ्वोःशूडावितिशः स्वप्नः रक्ष्णः यत्नः य
त्नः चेविवस्योपकृतीतिइड्भावः उप
सर्गेदाकिः उपसर्गे उपपदेदासंज्ञकानां

घटेनाया गोचाया        ग्रहोऽनिष्ठायां सेटः
ग्रहमतो धातोर्निष्ठायां सेटः अप्रत्ययो भवति ईहा
यथा ऊहा ऊहा ईहचे यत्नॆ ऊहि वै ऊहितर्क
ने ग्रहोरितिकिम् गर्हीनः ईहादीनां ग्रहेरिति दी
र्घः निष्ठायां सेट इति किम् आप्तिः        षिद्भि
दादिभ्योऽङ्        षकारानुबन्धेभ्यो धा
तुभ्यः भिदादिभ्यश्चाऽङ् प्रत्ययो भवति डुपचष्
ज्ञायां त्रपा त्रपूष् ल लज्जा जृष जरा जरा जर
स्वरेवेति ह्रस्वप्रकारकृतः भिदादिभ्यः भिदा छिदा
धरा आशिर्मांसादिभिराच्छादिता कारावन्यगृहम्
कारयन्त्यस्यां गृहीतान्कर्मणीति इम्लात्कृतः धा
रा धार्यते मेघेनेति एवमादयो भिदादयो लक्ष्याद्दृशमः
णीयाः        भीषिचिन्तिपूजिकथिकुम्बिचर्चि
स्पृहितोलिदोलिभ्यश्च        ञिभी भये हेतुनावि
त्वतः भियःषवैतिषुक् चितिस्मृत्या पूज पूजायां
कथवाक्यप्र कुबि आच्छादने चर्च अध्ययने स्पृह ईप्सा
याम् तुल उन्माने डुल उत्क्षेपे एतेभ्यः अः प्रत्ययो भ
वति भीषा चिन्ता पूजा कथा कुम्बा चर्चा स्पृहा
दोला तोला तुलया साम्येनापि चेति ह्रस्वप्रकारान् तुलाव
आतश्चोपसर्गे        उपसर्गे उपपदे आकारान्ता
द्धातोरङ् प्रत्ययो भवति उपधा सन्धा निष्ठा उप
सर्गात्स्नाति संवति स्थास्येनेयेति नञ्चाल्लयानवनम्
उपसर्गादिति किम् दातिः पीति दामागायनीतीव

न्‌ इषिग्रन्थ्यासिघट्टिवन्दिविदिकारि
तान्तेभ्यो युः इषगतौ ग्रन्थ आसउ घ
ट्ट वदि अभि विदिः सामान्यः एभ्यः कारितान्ते
भ्यश्च युप्रत्ययो भवति एषणा ग्रन्थना उपासना
घटना वन्दना वेदना कारितान्तेभ्यः कारणा
हारणा यातना कामना कामेरिति कारितसं
ज्ञाश्च वासना ग्रन्थेरपीच्छन्ते ग्रन्थना
कीर्तिघोः क्तिश्च कृतसंशब्दे इषगतौ
इच्छ इषश्चाभीक्ष्ण्ये इत्येता युनप्रत्ययो भ
वति क्तिप्रत्ययश्च कीर्त्तना कीर्त्तिः एषणा इष्टिः अ
तएवज्ञापकादिकारस्येत् नाम्निनोर्वौरितिदीर्घः
रोगाख्यायां वुञ् रोगाख्यायां विषये धातो
र्वुञ् भवति प्रवाहिका विचर्चिका विसूचिका प्र
च्छर्दिका संज्ञायाम् संज्ञायां विषये
धातोर्वुञ् भवति उद्दाल पुष्पभञ्जिका वारणा
पुष्पप्रचायिका क्रीडानामधेयमेते पर्याया
र्हर्णोत्पत्तौ च पर्याये अर्हे ऋणोत्पत्तौ गम्यमाने धा
तोर्वुञ् भवति पर्याये भवतः शायिका भवतःआ
सिका भवतश्चासने शयने च क्रमः प्राप्तः अर्हे भ
वः पाचिकामर्हति ऋणे इक्षुभक्षिकां मे धारयसि
ओदनभोजिकाम् प्रश्नाख्यानयोरिञ् च
वा प्रश्ने आख्याने गम्यमाने धातोर्वुञ् भव
ति पक्षे यथाप्राप्तं च कां कारिकामकार्षीः

भवति मूलकलभञ्जनी मूलकलानि भज्यन्तेयया
साधन्ती उच्यते मार्जनी खादनी पेषणी स्रस्तु
मुञ्जा खादिभेदे इदन्तु बन्धत्वामागमः पिष्टुसं
चूर्णिते अधिकरणे उदधानी उदकं धीयते अस्यां ए
कहलादौ पूरयितव्येन्यतरस्यामिति तन्मान्तराउद
कस्याङ्गस्य उदादेशः एवं मांसपचपने यस्यां सा मांस
पचनी मांसस्य पचि युड्घञोरिति मांसस्यान्तलोपः
**पुंसि संज्ञायां घः** धातोः संज्ञायां विषये घ
धादर्थाने घप्रत्ययो भवति तदन्तश्च शब्दः पुंसि
लिङ्ग एव प्रयुज्यते स च करणाधिकरणयोरर्थयोः
दन्ताश्छाद्यन्तेनेन दन्तच्छदः छद संवरणे छादेर्घे
णीन् अस्योपधेति दीर्घः छादेर्घेऽद्व्युपसर्गस्य यथा
ह्रस्वः एवमुरश्छदः प्रच्छदः लवन्त्यनेनेति लवः लु
छेदने अधिकरणे यथा भजन्त्यस्मिन्नाखानीति भ
गः भजमेवायाम् आकर्षन्त्यस्मिन्नित्याकरः कुक
चकरणे **गोचरसंचरवहव्रजव्यजा
पणनिगमाश्च** गोचरादयो घप्रत्ययान्ता नि
पात्यन्ते आवेशार्थवचनम् गावश्चरन्त्यस्मिन्निति गो
चरः संचरन्त्यस्मिन् संचरः वहन्त्यस्मिन् वहः व्र
जन्त्यस्मिन् व्रजः व्यजन्त्यनेन व्यजः आपणन्त्यस्मिन्
आपणः निगच्छन्त्यस्मिन्निति निगमः
**अवे तॄस्त्रोर्घञ्** अवशब्दे उपपदे तृ प्लवन
तरणयोः स्तृञ् आच्छादने अनयोः करणाधिकरणयो

र्थयोः अल् भवति अवतरन्त्यस्मिन् अवतारः अव स्तारः अवे इति किम् प्रतारः प्रस्तारः **अञ्ज नान्नाश्च** अञ्जनान्नाहाती: करणाधिकरणयोरर्थयोः अल्प्रत्ययो भवति अपमृज्यतेऽनेन अपामार्गः निषीदन्त्यस्मिन्नापणमिति निषादः

**अध्यायन्यायोद्यावसंहाराधारावायाश्च**

अध्याय न्याय उद्याव संहार आधार आवाय एते निपात्यन्ते अधीयतेऽस्मिन् अध्यायः नियन्त्यनेन न्यायः इङ् गतौः अनयोः कर्मकरणयोः अल् निपात्यते उद्युवन्त्यस्मिन् उद्यावः संह्रियन्तेऽस्मिन् भूतानि संहारः आध्रियन्तेऽस्मिन् आधारः आवयन्त्यस्मिन् आवायः आ सूर्वोदेशः सन्ध्यक्षरान्तानामित्यात्वे कृतेऽपवम् इत्य द्रावादाविति चीत्यादिः **ईषद्दुःसुषु कृच्छ्राकृच्छ्रार्थेषु खल्** कृच्छ्रे वाऽकृच्छ्रे वार्थे वर्तमानेषु ईषत् दुस् सु एषूपपदेषु धातोः खल् भवति स च भावकर्मणोः कृत्यक्तखलर्था इति भावकर्मणोर्भवति लकारो भावकर्मणोरित्यर्थः ईषत्करः कटो भवता भवता वा दुष्करः कटो भवता भवता वा सुकरः कटो भवता भवता वा खलेन क्रियते दुःखेन क्रियत इति वाक्यम् खल् ईषद्भेदः दुर्भेदः सुभेदः ईषद्दुःस्विति किम् कष्टसाध्यम् कृच्छ्राकृच्छ्रार्थेष्विति किम् ईषत्कार्यं मनागित्यर्थः **कर्तृकर्मणोश्च भूकृञोः** ईषद्दुःस्वेषु कृच्छ्राकृच्छ्रार्थेषूपपदेषु यथासंख्य

नेस्मरति एककर्तृकेष्विति किम् देवदत्तस्य भोक्तुम
मिच्छति कालसमयवेलाशक्यार्थेषु
च कालशब्दे समयशब्दे वेलाशब्दे च एषु श
क्यार्थेषु चोपपदेषु धातोः तुम्प्रत्ययो भवति कालो भो
क्तुम् समयो भोक्तुम् वेला भोक्तुम् शक्तो भोक्तुम्
पर्याप्तो भोक्तुम् समर्थो भोक्तुम् अर्हे तृ
च् अर्हः पूजायामित्यस्य कर्तरि कारकादिति तृच्
कर्तरि कन्यायाद्रेतेः संबन्धः अर्हतेः कर्ता अर्हः तस्मा
दिधेः कर्तरि तृच्प्रत्ययो भवति ^कन्याया वोढुमर्हः इत्य ^कन्याया वोढा^
र्थः प्रैषातिसर्गप्राप्तकालेषु कृत्याः
प्रेषणं प्रैषः अतिसर्गः कामचारः प्राप्तकालो ऽवस
रप्राप्तिः एतेष्वर्थेषु धातोः कृत्या भवन्ति प्रैषे यथा भ
वता कटः कार्यः कर्तव्यः करणीयः अतिसर्गे कर्त्तव्यं
तत्रापिधानकोपानत्कर्तेतेनावतः प्राप्तकाले भवता कटः
कर्तव्यः प्रैषातिसर्गे लिङ्ग इति तत्त्वान्तरे पञ्चमी विहिता
तथासामान्यापि घतेति ग्रन्थविहिताः पिधानव्याविकरण
वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः आपं चैव हल
निशा^ न्तानां यथा वाचा दिशा दिशा ल्लोपः आव
श्यकाधमर्ण्ययोर्णिनिः आवश्यके आध
मर्ण्ये च सति धातोः णिनिप्रत्ययो भवति अवश्यं भव
तीति अवश्यंभावी अवश्यं करोतीति अवश्यंकारी
अधमर्णे शतंदायी सहस्रंदायी निष्ठा
माशंसायाम् धातोः संज्ञायां विषयेऽति

रितिकिम् अलंकरणम् विलकरणम् भूषणानिस्व यार्थोवयालंविलयाङ्गा **एककर्तृकयोः पूर्वकाले क्त्वा** एककर्तृकयोः द्वयोः धात्वर्थयोः यः पूर्वकाले वर्तते तद्वाचकाद्धातोः क्त्वाप्रत्ययो भवति स्नात्वा भुङ्क्ते भुक्त्वा व्रजति अत्र य एव भुङ्क्ते स एव स्नाति य एव भुङ्क्ते स एव व्रजति इत्येककर्तृकत्वम् एककर्तृकयोरिति किम् देवदत्ते गते यज्ञदत्तो भुङ्क्ते पूर्वकाले इति किम् पचति च पठति च **परावरयोगे च** परो दूरः अवरो निकटः तयोर्योगे संबन्धे सति धातोः क्त्वाप्रत्ययो भवति अप्राप्य नदीं पर्वतः अत्र नद्या परया कर्मभूतया प्राप्तेर्निषिध्यमानाया योगः अतिक्रम्य पर्वतं नदी अत्रावरेण पर्वतेन कर्मणा अतिक्रमणस्य योगः उभयत्राप्येककर्तृकत्वाभावादप्राप्तोपि क्त्वा विधीयते **णमाभीक्ष्ण्ये द्विश्च पदम्** आभीक्ष्ण्ये पौनःपुन्ये गम्यमाने धातोः क्त्वाप्रत्ययो भवति णं च णकार इत्संज्ञार्थः द्विश्च पदं आभीक्ष्ण्यप्रत्ययत्वादेतस्य द्विः प्रयोजनम् पीत्वा पीत्वा पयः पिबति पायं पायं स्मृत्वा स्मृत्वा अत्र जीवन्मतिसंसारविरक्तेने स्मारं स्मारं संसारं विस्मरति आभीक्ष्ण्ये इति किम् भुक्त्वा याति **कर्मण्याक्रोशे कृञः खमुञ्** कर्मण्युपपदे आक्रोशे गम्यमाने कृञ् कारोऽस्मात् खमुञ्प्रत्ययो भवति नकार

ऽत्यज्ञावार्थः एवकारोदीर्घस्योपपदस्यार्थः उकार
उच्चारणार्थः चोरङ्कारमाक्रोशति वृषलङ्कारं ग्राम
णिङ्कारमाक्रोशति भार्याम् चौरोवृषलः ग्रामणीरि
त्युच्चार्येत्यर्थः स्वादौच स्वाद्वर्थाद्युपपदे
कृञः खमुञ्प्रत्ययो भवति स्वादुङ्कारंभुङ्क्ते मधुरङ्का
रं लवणङ्कारम् दृशिविदोःसाकल्ये
कर्मण्युपपदे दृशिविद् भ्यांणमुल्प्रत्ययः साकल्येगम्य
मानेणंभवति कन्यादर्शंवरयति यांयांकन्यांपश्य
ति तांतांवरयतीत्यर्थः यावतिविन्दजीवोः
यावत्शब्दे उपपदे विन्दलाभे जीवप्राणधारणेऽ
नयोर्णंभवति यावद्वेदंभुङ्क्ते यावज्जीवमग्निहोत्रं
जुहुयात् चर्मोदरयोःपूरेः चर्मन्
उदर एतयोःकर्मणोरुपपदयोः पूरीआप्यायने इ
त्यस्मात्णंभवति चर्मपूरंस्तृणाति उदरपूरंभुङ्क्ते च
र्मपूर्यतेनेन उदरंपूर्यतेनेनेति णकारितलोपः
वर्षप्रमाणऊलोपश्च कर्मण्युपपदेवर्ष
प्रमाणेगम्यमाने पूरेरस्मात्णंभवति पूरेश्च
वाऊकारलोपः गोष्पदप्रंवृष्टोदेवः गोष्पदपूरंवृ
ष्टोदेवः वर्षप्रमाणइतिकिम् आपाःसंपूर्यस्नाति
पूरत् चेलार्थेक्नोपेः चेलंवस्त्रंतदर्थे
कर्मण्युपपदे क्नूयीशब्दे उन्दनेचेत्यस्मात् ण्यन्ता
त् णंभवति चेलक्नोपंवृष्टोदेवः वस्त्रक्नोपंवृष्टोदे
वः वसनक्नोपं परिधानक्नोपं क्नूयमानंवस्त्रमेवंविधा

दे उपपदेपुष्णातेर्णंभवति स्वपोषंपुष्णाति स्वेनपु
ष्णातीत्यर्थः धनपोषम् अर्थपोषम् रैपोषम् द्रवि
णपोषम्    **बन्धोधिकरणे**    अधिकर
णे कारकेउपपदे बन्धबन्धनेइत्यस्यणंप्रत्ययोभव
ति चक्रबन्धंबध्नाति चक्रेबध्नातीत्यर्थः
**कर्त्रोर्जीवपुरुषयोर्नशिवहिभ्याम्**
जीवपुरुषयोः कर्त्रोरुपपदयोः णशअदर्शने वह
प्रापणे आभ्यांणम्प्रत्ययोभवति जीवनाशंनश्यति पुरुष
वाहंवहति कर्त्रोरितिकिम् जीवेननश्यति पुरुषेण
वहति    **ऊर्ध्वेशुषिपूरोः**    ऊर्ध्वशब्देकर्त
र्युपपदे शुषशोषणे पूरीआप्यायने अनयोःणम्भव
ति ऊर्ध्वशोषंशुष्यति ऊर्ध्वपूरंपूर्यते ऊर्ध्वःशुष्यति ऊ
र्ध्वःपूर्यते    **कर्मण्युपमाने**    कर्म
णिकर्तरिचोपपदे उपमानेधातोःणम्भवति अजक
नाशंनष्टः यथाअजकोनश्यति तथानष्टइत्यर्थः अ
त्रअजकःकर्ता रत्ननिधायंनिहितः यथारत्ननिधी
यतेतथानिहितइत्यर्थः अत्ररत्नंकर्म उपमानेइति
किम् रत्नंनिहितं    **कषादिषुनैवानुप्र**
**योगः**    निमूलसमूलयोः कषइत्यस्मात्तथान्य
येभ्योधातुभ्योणंभवति तैरेवधातुभिरनुप्रयोगोभ
वति तथाचैवोदाहृतम्    **तृतीयायामु**
**पदंशः**    तृतीयायांसप्तम्यांचाद्युपपदेद
शदशनेइत्यस्मात् उपपूर्वात् णंप्रत्ययोभवति मू

लकेनोपदंशंभुङ्क्ते मूलकोपदंशंभुङ्क्ते उपदंशंमू
लकेनवा तृतीयायांवेत्युपपदस्य प्राग्भावसमा
सविकल्पः **हिंसार्थादेककर्मकात्**
तृतीयान्तेउपपदेहिंसार्थाद्धातोः अनुप्रयोगक्रियया सहै
ककर्मकात् णंभवति दण्डेनोपघातंगाः कालयति
दण्डोपघातंगाःकालयति दण्डेनोपघातम् उपघाते
दण्डेन दण्डेनताडयित्वामहिषीर्दमयति दण्डताडं द
ण्डेनताडं ताडंदण्डेनेतिवा प्राग्भावसमासयोर्विक
ल्पः एककर्मकादितिकिम् दण्डेनचोरंगाःकालय
ति **सप्तम्यांचप्रमाणासत्त्योः**
तृतीयान्तेउपपदे सप्तम्यन्तेच धातोःणं
प्रत्ययोभवति प्रमाणासत्त्योर्गम्यमानयोः प्रमा
णमायामः आसत्तिःसन्निकर्षः अङ्गुलेनोत्कर्षं अ
ङ्गुलोत्कर्षंखण्डिकांछिनत्ति अङ्गुलेउत्कर्षमितिवा आस
त्तौ केशग्राहंयुध्यन्ते केशैर्ग्राहं केशेषुग्राहमितिवा
**अपादानेपरीप्सायाम्** अपादानेउपप
देपरीप्सायांगम्यमानायांधातोःणंभवति परीप्सा
त्वरा शय्योत्थायंधावति शय्याया उत्थायंवा उदः
स्थास्तम्भोरितितस्यातस्थः झरोझरिसवर्णे
इतिथलोपः प्राग्विरेचीत्यादिः परीप्सायामितिकि
म् शय्यायाउत्थायसमाधानंकरोति **द्विती
यायांच** द्वितीयान्तेउपपदेपरीप्सायांगम्य
मानायांणंभवति यष्टिग्राहंयुध्यन्ते प्रहिंसदीवे

तिविकल्पेनोक्तः ब्राह्मणकन्याते गर्भिणीति [illegible]
त्वं किमुच्चैःकारं कथयसि उच्चैःकृत्वा वा अयथाभिप्रेता
ख्यानमनभिप्रेतमप्रियात्मनाख्यानम् एवं ब्राह्म
ण पुत्रस्ते जातः धिग्जाल्म किं नीचैःकारं कथयसि
नीचैःकृत्वा वा अत्रापि प्रयोजनम् । नीचैःकथनमन
भिप्रेतम् तृतीयादिष्वपदं समासविकल्पेनोक्तः
कृत्वापि भवति समासेभाविनीतिक्त्वायम् स्वाङ्गे
तसि क्त्वाणमुलाववर्तेते स्वाङ्गे तस्प्रत्ययान्ते उपपदे
कृञः क्त्वाणमुलौ च भवतः मुखतःकृत्वा मुखतःकृ
त्य मुखतःकारम् आद्यादित्वात्तस्

**भुवस्तूष्णीमि च** तूष्णीमितित्वमस
मनीकम् लोपश्चास्य लोपोन्त्यलोपश्चेत्यादिना तू
ष्णीशब्दे उपपदे च शब्दान्तरस्यैव स्वाङ्गे भू सत्तायामि
त्यस्य क्त्वाणमुलौ भवतः तूष्णींभूत्वा तूष्णींभूय तूष्णीं
भावम् स्वाङ्गे मुखतोभूत्वा मुखतोभूय मुखतोभा
वम् कृञस्तु वर्तेते तूष्णींकृत्वा तूष्णींकृत्य तूष्णींका
रम्

**शकधृषज्ञाग्लाघटरभलभक्रमसहार्हास्त्यर्थेषु तुमुन्** शक्लृ शक्तौ ञिधृषा
प्रागल्भ्ये ज्ञा अवबोधने ग्लै हर्षक्षये घट चेष्टायाम्
रभ राभस्ये डुलभष् प्राप्तौ क्रमु पादविक्षेपे षह मर्ष
णे अर्ह पूजायाम् इत्येतेषूपपदेषु अस्त्यर्थेषु च अस
भुव विद सत्तायाम् च धातोः तुम् भवति शक्नोति भो
क्तुम् धृष्णोति भोक्तुम् जानाति भोक्तुम् ग्लायति भोक्तु

कोधातुलस्यभाविनिमित्तविज्ञाति समासेसतियथा
देशोभवति सचकोप्यत्रयस्यैवनकालस्य सर्वस्य
प्रकृत्य प्रत्यय समासेइतिकिम् कृत्वा युनन इतिकि
म् प्रकृत्यापरसन्तापम्   चजोःकुघिण्ण्यतो
र्घण्यतोः   चकारजकारयोर्घण्यसंज्ञके का
रगकारौभवतः घञादौचान्त्येवप्रत्ययेपरे प
का पाचकः त्यजकत्यागः भग्नः भुग्नः भक्तोभामर्द
ने भुजोकौटिल्ये निष्ठेतिकः अनेनलक्षयागः ततोला
योदन्तुवत्यादिति निष्ठानत्वम्   न्यङ्क्वादी
नाञ्च   चजोःकुत्वविनैव न्यङ्क्वादीनां
पाठात्मितचजोः कवौभवतः तेषांमध्येयहकारःत
स्यात्स्यचत्वंभवति न्यङ्कुः अन्वेर्निपूर्वात् नावन्तेरि
तिउप्रत्ययः कस्यकत्वम् मद्गुः प्रथमदधसंज्ञासलो
पश्चेतिमस्जेः कः सलोपश्च यहन्यावयीतिमेश शब्दे
नस्त्रयागः मज्जतीतिमद्गुः जस्यगत्वेकृते भृदात्स्ती
यइतिस्थानसावर्ण्यात्तस्यत्तीयेद ः भृहः मोद्गः
मिहः मेघः अर्हः अर्घः दहः दाघः निदाघः ओहः ओ
घः एवमन्येपिन्यङ्क्वादयोलक्ष्यादन्वेषणाः
नकवर्गादिव्रजाम्   कवर्गादेर्धातो
श्चेजेस्तोश्च चजोः कौनभवतः पूर्वेणप्राप्तौ कारः
कूजः खर्जः गर्जः गजः कचकारादीमिदेवनयोः
रहतिवाद्वे परिव्राजः समासः घन् कूजम् गर्जम्
वाग   घ्यण्यावश्यके   आवश्यकार्थे

दृग्दृशदृक्षेषु समानस्य सः समानश
ब्दस्य सआदेशो भवति दृक् दृश दृक्ष परेषु स
दृक् सदृशः सदृक्षः अनयोर्व्याप्यमानयोर्हि
पि कर्मोपमाने त्यदादौ विति क्विप्कञ्कः क्सो
श्चेति सामर्थ्यः षष्ठ्योः कः इदमई
दृग्दृशदृक्षेष्विति वर्तते विष्वग्देवयोरित्यतः प्राक्
इदम्शब्दस्य दृग्दृशदृक्षेषु परेषु ईकारादेशो भवति
अयमिव दृश्यते ईदृक् ईदृशः ईदृक्षः कर्मोप
माने इति क्विप्कञ्कः किंकी
किंशब्दस्य की आदेशो भवति दृग्दृशदृक्षेषु परेषु
कीदृक् कीदृशः कीदृक्षः अदसोमु
अदस् शब्दस्य दृग्दृशदृक्षेषु परेषु अमु आदेशो भ
वति अमूदृक् अमूदृशः अमूदृक्षः आस
र्वनाम्नः सर्वनाम्न आत्वं भवति दृग्दृशदृक्षेषु
परेषु तादृक् तादृशः तादृक्षः एतादृक् यादृक्
त्वादृक् मादृक् युष्मादृक् अस्मादृक् भवादृक्
सर्वनाम्न इति किम् सदृक् सदृशः सदृक्षः
विष्वग्देवयोश्चान्त्यस्वरादेरद्र्यञ्चतावप्रत्यये
सर्वनाम्नः विष्वक् देव इत्येतयोश्चान्त्यस्वरादेरव
यवस्य अद्रि आदेशो भवति अञ्चताविति अञ्चतौ
क्विबन्ते परे तदद्र्यङ् सर्वद्र्यङ् यद्र्य
ङ् अस्मद्र्यङ् भवद्र्यङ् अमीषां सर्वनाम्नां लक्ष्येन देयप
ने विष्वद्र्यङ् देवद्र्यङ् अञ्चताविति किम् तद्गमकि

तत्रपक्व एवंविश्वपत्रक्व देवयक्व कावितिकिम् विश्व
गच्छकः त्रुग़ **सहसमतिरःसधिसमि**
**तिरयः** सहसमतिरः एषांक्रमेण सध्रि
समितिरि इत्येते आदेशाभवन्ति अञ्चतौक्विबन्ते परे
सध्र्यञ्चति सध्र्यङ् समञ्चति सम्यङ् तिरोऽञ्चति
तिर्यङ् **रुहेर्योवा** क्वावितिवर्तते उत्त
रसूत्रेवाश्च रुहेर्वेत्तिजन्मनीत्यस्याक्विबन्तस्याक्य
स्यवाधत्वंभवति विरोहति वीरुत् वीरुधौ वीरुधः
वाग्रहणंव्यवस्थितविभाषावाची तेनावि पाक्षे उपप
देहस्येर्नित्यधत्वम् अन्यत्रनभवत्येव सरोरुट् स
रोरुहौ महीरुट् महीरुहौ **मोनोधातोः**
धातोरन्त्यस्य मकारस्य क्वौ परे नत्वंभवति प्रशाम्यति
प्रशान् एवंप्रधान् प्रतान् **वमोश्च**
धातोर्मकारस्य वमोः परयोः नकारोभवति जग
न्वान् क्वसुकानाविति क्वसुः अगन्मज्योतिरुत्तमम्
इत्यत्तनी उत्तमबहुवचने म छान्दसत्वादन्विकर
णलोपः **स्तोर्धातुरतान्** यस्याक्वि
बन्तस्यसस्यनत्वश्चकेसस्वरेपरेधात्वंभवति धातस्व
रूपंप्राप्नोतीतिनत्वंनिवर्तते तदर्थंश्रुतमनाद
तिधातुस्वरूपप्राप्नोवधि आत्वंनानिवर्तते इत्यर्थः प्र
शासौ प्रशासः प्रतासौ प्रतासः स्वरेइतिकिम् प्र
शा प्रशाभ्याम् प्रताभिः **अतीत्यवसे**
**दवदातानामिद्वृत्तौ** अतीति म्रगौ अः

स्त्रगन्तादितिवा इणागमो अदेर्घस्लृ पश्चादेकस्वरा
णामाकारान्तानांच धातूनां वस्वेकाचपरेइडागमोभव
ति घोषवत्योश्चकृतीतिनिषेधःप्राप्तः आदिवान्
अतः इट् स्वरविधिःस्वरेइतिस्यात्पूर्वंद्विर्वं अका
रस्यवर्णस्य अस्यादेःसर्वत्रेतिदीर्घः सत्वम् ईयिवा
न् इणः कसुः इट् प्रागवत्पूर्वं द्विर्वं दीर्घइणइति
दीर्घः पश्चादिणोयइतियत्वम् जक्षिवान् वापरोक्षा
यामितिअदेर्घस्लृ पूर्वं द्विर्वं अभ्यासकार्यम् पश्चा
द्गमहनेत्युपधालोपः अघोषेप्रथमः घा
सिवसीतिषत्वम् एकस्वर पेचिवान् शेकिवान् द्वि
र्वे अस्यैकव्यञ्जनमध्ये इत्येत्वाभ्यासलोपौ अनेकव्य
रात्तोनभवति जजागृवान् पक्षे परोक्षवद्वाजागृव
विदजागृभ्योवेत्याम् आमःकृञ् जागरांचकृवान्
आकारान्तानां पपिवान् तस्थिवान् इटिचेत्यालोपः
**गमहनविदविशादृशोवा** पञ्चानामेषां
इड्वाभवति जग्मिवान् जगन्वान् जघ्निवान् जघ
न्वान् विविदिवान् विविद्वान् पक्षे उषविदेत्याम्
विदांचकृवान् विविशिवान् विविश्वान् ददृशिवा
न् ददृश्वान् **दाश्वान्साह्वान्मीढ्वांश्च**
एतेनिपात्यन्ते दाश्वानित्यत्रदाशृदानेइत्यस्य द्विर्व
चनस्याइटश्चाभावोनिपात्यते मीढ्वानित्यत्र मिहे
ईत्वढत्वेच **नश्वृतोहनोकारश्च**
नो श्निनशेवायातिनस्य उवर्णान्तानां

र्छे मूर्त्तः मूर्त्तवान् ओलस्जी व्रीडायां लग्नः लग्नवा
न् अन्तरङ्गत्वात् स्कोः संयोगाद्योरिति सलोपे चकोः
कगाविति जस्य गत्वे कृते निष्ठानत्वम् वेट्टाम् क्षु
नः क्षुमवान् शान्तः शान्तवान् मूढः मूढवान्
इति धात्वीकारपरत्वे वेटौ उदि: उदन्तत्वादेट्
भवति निष्कुषोविति किम् पतितः पतितवान् निष्कु
षितः निष्कुषितवान् आदन्तवन्धाश्च

आकारानुबन्धाद्धातोः निष्ठायां इट् न भवति मिन्नः
मिन्नवान् स्विन्नः स्विन्नवान् ञिमिदा स्नेहने ञिष्विदा
गात्रप्रस्रवणे आनुबन्धौ मिन्नः निष्ठेति कृवन्तः स्वि
दे: गत्यर्थाकर्मकेति क्तः कृवन्तः प्राग्वत् दान्तस्य
च द इति निष्ठातकारस्याधस्य दकारस्य नत्वम्

भावादिकर्मणोर्वा आदनुबन्धाद्धातोः
भावे आदिकर्मणि चोत्पन्नायां निष्ठायां परतः इट् वा भव
ति श्वैतानिवेति निषेधः प्राप्तः मिन्नं मेदितम् स्विन्नं
स्वेदितम् ष्विन्नं ष्वेतितम् आदिकर्मणि प्रमिन्नः प्र
मेदितः प्रस्विन्नः प्रस्वेदितः मेदिते प्रसन्नः स्वेदिते
प्रस्वन्नः आदिकर्मणि क्तः कृवन्तः प्राग्वत् दान्
तस्य च इति निष्ठातकारस्य पूर्वस्य दकारस्य च
नत्वम् ॥ ठैं॥ लभिवाहिस्वनिधन्विफणि

कविम्रुचां लेतमत्यवदधामनलमनायास
मोक्षाविभाषनेषु लभसस्खलने वाहि
प्रयत्ने स्वनध्वनशब्दे फणगतौ कपिहिंसार्थः श्रावि

र्णवान् न्यर्णः न्यर्णवान् व्यर्णः व्यर्णवान् संनिवि
भ्य इति किम् अर्दितः ॥ सामीप्येऽभेः ॥
अभिपूर्वस्य अर्देः निष्ठायामिड्न भवति सामीप्येऽर्थे
अभ्यर्णः अभ्यर्णवान् सामीप्ये इति किम् अभ्यर्दितः

## रुष्यमत्वरसंघुषास्वनाम् ॥

रुषादीं
नामर्थः अमरोगेति त्वरासंभ्रमे घुषिर् शब्दे संघु
र्वः स्वनशब्दे आङ्पूर्वः एषां निष्ठायामिड्वा भवति
रुष्टः रुष्टवान् रुषितः रुषितवान् अभ्यान्तः अभ्या
न्तवान् अभ्यमितः अभ्यमितवान् तूर्णः तूर्णवान्
त्वरितः त्वरितवान् संघुष्टः संघुष्टवान् संघुषितः
संघुषितवान् आस्वान्तः आस्वान्तवान् आस्वनितः
आस्वनितवान् त्वरेः ज्वरत्वरस्रिव्यविमवामुपधायाश्च वकार
स्योठ् अमस्वनोः पञ्चमोपधायेतिदीर्घः रुषिघुषोः
नवर्णविदितिनियमात्

## ॥ हृषेर्लोमसु ॥

हृषधातोर्निष्ठायां लोमविषये प्रयोगे इड्वा भवति
हृषितलोमा हृष्टलोमा लोमस्विति किम् हृष्टम
नः

## ॥ वा दान्तशान्तपूर्णदस्तस्पष्टच्छन्नज्ञप्ताः ॥

एते वाह्याः ण्यन्तस्यैवाभिधायके द
मिशाम्योरिण्यन्तयोरिडभावो वा निपात्यते दान्तः
शान्तः दमितः शमितः पूरेरपीनत्स्यैव पूर्णः पू
रितः दस्तः दासितः स्पष्टः स्पाशितः छन्नः छादि
तः ज्ञप्तः ज्ञपितः दसउपक्षये स्पशबाधने छदसं
वरणे ज्ञा अवबोधने इन् ज्ञानातेः अर्तिह्रीव्लीति